महाशोके न संतप्तो बहुधा विललाप सः ॥ पुत्र शिशो वत्स किमिदं समुपस्थितं ॥ ३२ ॥ अ-
हं पापो दुराचारो दुरात्मा क्रोधमोहितः ॥ यत्र वैवस्वतो राजा दारुणो नरकस्तथा ॥ ३३ ॥ ज-
गत त्वं त्वया तत्र प्रियोसि मम पुत्रकः ॥ एवं तु बहुधा मोहाच्छोचमानं मुहुर्मुहुः ॥ ३४ ॥ उद्दा-
लकं च न प्राह नासिकेतस्तदा रघी ॥ पितरं जनकं चापि विलपंतं मुहुर्मुहुः ॥ ३५ ॥ श्रुत्वातिक-
रुणां स्नेहान्नासिकेतो ब्रवीद्वचः ॥ नासिकेत उवाच ॥ भगवंस्तात वचनं माभून्मिथ्या
कदाचनः ॥ त्वं सत्यवचनं वक्तुं वधमि त्वान सर्वथा ॥ ३६ ॥ आज्ञा प्रकारकं पुत्र पितृध-
र्मविवर्धनः ॥ मातातात सत्य नाकुशो च असत्यात्तेन वाक्कचित् ॥ ३७ ॥ कथं पुत्रेण ताकर्त-
व्यमसत्यं पैत्रकं वचः ॥ आज्ञां तव करिष्यामि मा विकल्पं कथं प्रभो ॥ ३८ ॥ सत्येनार्कः
प्रतपति सत्ये धर्मः प्रतिष्ठितः ॥ अश्वमेधसहस्राणि सत्येन न तुलितानि न ॥ ३९ ॥ वाजि-
पणातेभ्योपि सत्यमेवाधिकं मतं ॥ सत्येन गम्यते स्वर्गः सत्येन परमां गतिं ॥ ४० ॥ सत्यही-
धर्मविहीनस्य नरके पतितं ध्रुवं ॥ तस्मात्त्वं वै प्रयत्नेन शोकं त्यक्त्वा स्थिरो भव ॥ ४१ ॥ अ-
हं तु यमपुरीं द्रष्टुं भगवन् न वक्लिपद्वचः ॥ सत्यमेवागमिष्यामि तव पादसमीपकात् ॥ ४२ ॥
पितरं मातरं वापि नमस्कृत्य कृतांजलिः ॥ नासिकेतो विनितात्मा दारोतां नतमूर्धी यत

तत्कर्मबंधमात्मनः ॥१९॥ मृते जन्मा पुनर्मृत्युः संसारार्णवमग्नः पुनः ॥ योगाभ्यासं विना नास्ति
संसारार्णवतारणं ॥२०॥ ब्रह्माद्या देवताः सर्वे गणकाद्यास्तपोधनाः ॥ सर्वे योगवशात्सिद्धिं
सिद्धाः जाता महात्मने ॥२१॥ योगेन सदृशो नास्ति उपायो मुनिसत्तमः ॥ किं मे हितं गतो व
च्मि सर्वशास्त्रविशारद ॥२२॥ उद्दालक उवाच ॥ ऋषयश्च महाभागये चान्ये तपसि स्थिताः
अग्निहोत्रात्तपः स्नानं सत्ये यावेदिकी कृतिः ॥२३॥ अग्निहोत्रं विना पुत्र वृथा यज्ञे न विद्य
ते ॥ एवं श्रुत्वा तु विधिवत्पितरं पुनरब्रवीत् ॥२४॥ नासिकेत उवाच ॥ अग्निहोत्रफलं नेष्टं न
भवति कारणं ॥ स्वर्गं गत्वा पुनर्जन्म घोरसंसारसागरे ॥२५॥ योगाभ्यासपरो मर्त्यो न
भूयो न विजायते ॥ अग्निहोत्रेण नाप्नोति पितृयज्ञेन तेन च ॥२६॥ न वै तद्दैवयज्ञेन योगा
भ्यासात्तु यत्प्राप्नुयात् ॥ वैशंपायन उवाच ॥ इति पुत्रवचः श्रुत्वा मुनिरुद्दालकस्तथा ॥२७
अनेनाकुक्रमुद्दितं दुरात्मा पितृदूषकः ॥ क्रोधेन महता विप्रो ददौ शापं सुदारुणं ॥२८
अधर्मवादी पुत्रस्त्वं दुरात्मा पितृदूषकः ॥ जन्मप्रभृति यत्नेन पालयन्वत्सदर्द्दृहि नान्यथा ॥२९
पितृशापेन रौद्रेण यावत्ततो धरणीतले ॥ प्रतापरूपि दृष्ट्वा तातं नासिकेतो महामुनिः ॥३०
वैवस्वतो स्थितो यत्र तत्र याति तदा जया ॥ पतितं पुत्रकं दृष्ट्वा ऋषिर्जातोतिविह्वलः ॥३१

दिव्यमंत्रधैर्याविदिव्यदृष्टिस्तपेवच॥ संप्राप्तोवायवेगेनयत्रराजास्थितोयमः॥४४॥ध
र्मराजंततोदृष्ट्वाज्वलंतमिवपावकं॥ सिंहासनसमासीनंसूर्यपुत्रंमहावलं॥४५॥प्रा
ण्यचातिधीरात्मानासिकेतोनराधिपः॥ ततोधर्मोपिधर्मात्मादत्वापाद्यासनंददौ॥४६
तस्मैतत्रोपविष्टायमधुपर्कमकल्पयत्॥ नासिकेतःततस्तोषीद्भक्तिभावेनसंस्तुतः॥४७
इतिश्रीनासिकेतोपाख्यानेधर्मराजदर्शनंनामपंचमोध्यायः॥५॥ वैशंपायनउवा
च॥ यमंदृष्ट्वासमासीनंध्येविद्धजनविभूषितं॥ तेनतस्यकृतंस्तोत्रंश्रृणुतांनृपसत्तम॥१॥
नासिकेतउवाच॥ नमस्तेधर्मराजायनमस्तेलोकसाक्षिणे॥ सर्वलोकैकरक्षायनम
सर्वध्यतायच॥२॥ नमोमार्तंडपुत्रायधर्माधर्मैकसाक्षिणे॥ पितृणांपरमेशायनमस्ते
सुरपूजिते॥३॥ नमस्तेवुद्धिवृद्धायनमस्तेनिर्मलायच॥ क्षमाक्षमस्वरूपायनमस्तेस्तु
प्रजापते॥४॥ धर्माधिकारिणेश्रीमन्नमस्तेविश्वरूपिणे॥ नमोधर्मायमहतेनमस्ते
पापनाशिने॥५॥ ज्ञानायज्ञानरूपायनमस्तेधर्ममूर्तये॥ वहुप्रकारनमस्तेस्तुधृताश्री
वहुरूपिणे॥६॥ वैशंपायनउवाच॥ नासिकेतकृतंस्तोत्रंपरमंपापनाशनं॥ यःपठंतिन

न्मसि
९७

ता॥ स्तुतिभिस्तोषितो धर्मो बध्वा च करांजलिं॥२२॥ तुष्टो मत्येंद्रदो धर्मस्त्वासंतुष्टमानसः॥
देवाश्च विविधा दृष्टा यमदूता महाबलाः॥ चित्रगुप्तो मया दृष्टो धर्माधर्मनिवेदकः॥ मया तत्र वरो
लब्धो विनयाविष्टचेतसा॥२४॥ अजरत्वामरत्वे वा व्याधिदुःखविवर्जितः॥ आगतोत्र पुनर्भ्रा
हं प्रसादात्पितुरेव हि॥२५॥ विस्तरेण प्रवक्ष्यामि शृणु राजन्यमसादने॥ योजनानां सहस्रेण
विस्तीर्णं हि पुरं शुभं॥२६॥ तत्र दुर्गं पुरं रम्यमुच्छ्रितं पंचयोजनं॥ चतुःस्तंभं चतुर्द्वारं चतुष्पथवितजितं
[illegible]ः॥२७॥ नानाजनपदाकीर्णं नानारत्नोपशोभितं॥ गीतवादित्रसंयुक्तं नानापुष्पोप
शोभितं॥२८॥ बहुशास्त्रसमायुक्तं सुविरागैर्योजिनामपि॥ अप्सरोगणसंघर्वैः विद्याधरमहो
रगाः॥२९॥ पूर्वद्वारे तिष्ठंति शिवभक्तिपरायणाः॥ श्रीकृष्णे तुलप्रदातारो साचैव हि प्रदाय
कः॥३०॥ विश्वामित्रदासस्य तत्रान्ये व्रजन्ति स्वाहति शंकिनः॥ सत्यधर्मरता ये च क्रोधलोभविव
र्जिताः॥३१॥ देवपूजारता ये च पितृमातृपरायणाः॥ व्रजंति विष्णुनक्षत्रातीर्थस्नानपराय
णाः॥३२॥ पूर्वकृत्यसाधका ये च भक्ता येऽनशनेन तत्था॥ वाराणस्यां मृता ये च मृता वह्निजलेषु
वा॥३३॥ ते यांति उत्तरे द्वारं व्रजंत्यन्ये च पश्चिमे॥ परद्रव्यपरस्त्रीषु परद्रोहपराङ्मुखाः॥३४॥
अहिंसकाश्च भूतानां विष्णुभक्तिपरायणाः॥ व्रजंति पश्चिमे द्वारे परजीवाभयप्रदाः॥३५॥ दु
रात्मानो दुराचाराः दुःशीलाः रौद्रकर्मिणः॥ असत्यवादिनश्चैव गुरुदेवविदूषिताः॥३६॥ कृतघ्न

राम
९७

त्रुगतास्तथा ॥७॥ उद्दिष्टेन तपंति तप परमदारुणं ॥ नग्नावृतधराश्चान्ये अग्निहोत्रपरायणाः
योगाभ्यासपराश्चैव वल्कलैश्च परायणे ॥ अघोद्दिष्टेन निरताः कृच्छ्रचांद्रायणे रताः ॥८॥ आगतास्त
र सर्वे नासिकेतस्य पश्यथा ॥ ततः सर्वे समासीना मधुपर्केण पूजिता ॥१०॥ नासिकेतमहात्म
नं पप्रछुरिदमादरात् ॥ उद्दालकात्मजः प्राज्ञ श्रुतिस्मृतिपरायणाः ॥११॥ उद्दालकात्मजः प्रा
ज्ञ नासिकेतोद्भूतं महत् ॥ पितुराज्ञानियोगेन दृष्टा संयमनीत्वया ॥१२॥ श्रुतं च त्वया दृष्टं पर
लोके हितं वद: ॥ ज्ञात्वा त्वं धर्मराजस्य पुरी पुनरीहागतः ॥१३॥ इदानीं कृपयास्माकं शुभाशुभ
निदर्शनं ॥ यमलोके च यद्दृष्टं यत्श्रुतं तत्तथा वद ॥१४॥ यमस्य कीदृशं रूपं यमदूतास्च कीदृ
शाः ॥ कीदृशो कालपाशश्च कीदृशा नरकानि च ॥१५॥ कास्थितिस्तत्र लोकानां श्राचास्तत्र की
दृशाः ॥ कीदृशी धर्मसंपत्तिस्तपोज्ञानं च कीदृशाः ॥१६॥ इह यज्ञकृतं कर्म पुण्यं वा पापादिकं नरैः
कथं तल्लभ्यते तत्र वदस्व मुनिपुंगवः ॥१७॥ स्वर्गाश्च विविधाकाराः कथं वा नरकाः पुनः ॥ कथं
दृष्टा मुनिश्रेष्ठ वदस्व मुनिपुंगव ॥१८॥ समेत्य मुनयः सर्वे पृछंति त्वां महोत्सुकाः ॥ इति सर्वे म
हाभागा तत्वा यमशासनं ॥१९॥ संसाराग्नौ संमग्नाः तस्मात्कालवशे स्थिताः ॥ सत्यमासया
हि सत्यात्मन यथा दृष्टं तथा वद ॥२०॥ नासिकेत उवाच ॥ श्रूयतां मुनयः सर्वे ये चान्ये त्र तप
स्विनः ॥ यत्पृष्टं तत्प्रवक्षामि परमं लोमहर्षणं ॥२१॥ पितुराज्ञा वाद्भूतस्माहं धर्मराजो नमस्कृ